**अनु०—— बट्तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-**
**र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥**

**यस्य तन्मूलरूपं बट्** बलात्मकं **दर्शतं** ज्ञानरूपं च । दृशेरौणादिकोऽतच्प्रत्ययः ।

अनेन वायुशब्दो निरुक्तः । वशब्दो बलवाची । अयतिः गत्यर्थः । गत्यर्थाश्चाव-गत्यर्थाः । तत उण् । वश्चासौ आयुश्चेति वायुरिति ।

किञ्च **भर्गो** भरणगमनयोः कर्तृ । डुभृञ् भरणे, गम्लृ गतौ, आभ्यामसुन्प्रत्ययो डिच्च । इदमपि वायुशब्दव्याख्यानम् । वा गतिगन्धनयोः इत्यतः 'कृवापाजिमिस्वदिसाध्यशूभ्य उणि'त्युण् । अनेकार्थत्वाद्धातूनां वातिर्भरणेऽपि वर्तते । अपि च **महत्** श्रेष्ठम् । वयः श्रेष्ठत्व इत्यस्मादुण् ।

न केवलं मूलरूपमेवं किन्तु यस्यावतारेषु **निहितं** रूपं **इत्थमेव** ।

यस्य **प्रथमकं** प्रथमं रूपं रामविषयाणि वचांसि मूलरामायणादीनि रामवचांसि तेषां नयं नीयन्ते शिष्येषु प्रवर्त्यन्तेऽनेनेति । एरजित्यच् ।

यस्य **द्वितीयं वपुः पृक्षः** । पृच्छदः पृतनावाची प्रसिद्धः । तस्मिन्कर्मण्युपपदे क्षै क्षय इत्येतस्मात् आतोऽनुपसर्गे क इति कः । उपपदतकारलोपश्छान्दसः । पुलिङ्गं(ङ्गः) च श्रुत्यनु-सारेण । असुन्वा प्रत्ययः । किंदिति नपुंसकमेवेदम् । रिपुपृतनाक्षयकारीत्यर्थः ।

यस्य **तृतीयं वपुः एतन्मध्वः** । मधुशब्दः सुखवाची । 'मधु द्यौरस्तु नः पिते'ति प्रयोगात् । वशब्दः शास्त्रापरपर्यायतीर्थवाची । वातेरवगत्यर्थात्करणे घञर्थे कविधानमिति कः । सुखसाधनं तीर्थमस्येति । स्वरित्यत्रेवोकारलोपः ।

परि०—— **अतच्प्रत्यय इति** । 'उणादयो बहुलमि'ति सूत्रादिति भावः ॥ तथा च 'पुगन्ते'ति गुणे दर्शतमिति रूपमित्यर्थः ॥ **अनेनेति** । बट्दर्शतेति कथनेनेत्यर्थः ॥ **गत्यर्थ इति** । 'अयपय गतावि'ति धातुपाठादिति भावः ॥ **तत उणिति** । अयधातोरौणादिके उणप्रत्यये 'अत उपधाया' इति वृद्धावायुरिति रूपम् । तस्य वशब्देन कर्मधारय इत्याह **वश्चासाविति** ॥ **किञ्चेति** । मूलरूपं बलात्मकं ज्ञानरूपं चेत्येतावदेव न किन्तु गुणान्तरयुक्तं चेत्यर्थः । तदाह **भर्ग इति** ॥ **असुन्प्रत्ययो डिच्चेति** । डित्वात् गमेष्टिलोपः भृञोऽकारोन्तादेश इति भावः ॥ **कृवापाजीति**

उणादिसूत्रम् । डुकृञ् करणे । वा गतिगन्धनयोः । पा पाने । जि जये । डुमिञ् प्रक्षेपे । स्वदि आस्वादने । साध संसिद्धौ । अशु व्याप्तौ । एभ्यो धातुभ्य उण्प्रत्ययो भवतीत्युण्प्रत्यये 'आतो युक् चिण्कृतोरि'ति युगागमे वायुरिति रूपसिद्धेरिति भावः ॥ **वातिरिति** । वाधातुरित्यर्थः ॥ **अपि चेति** । गुणान्तरोपेतं च तद्रूपमित्यर्थः । इदमपि वायुशब्दव्याख्यानमिति भावेन तदारूढं दर्शयति **वय श्रेष्ठत्व इति** । वय् इत्यस्मादुणि उपधावृद्धौ वायुरिति सिद्धेरिति भावः ॥ **इत्थमेवेति** । उक्तगुणविशिष्टमित्यर्थः । नयशब्दस्य नेतृत्वमर्थ इति भावेन व्युत्पत्तिमाह **नीयन्त इति** ॥ **शिष्येष्विति** योग्यतयाऽन्वेति ॥ **अनेनेति** । रूपेणेत्यर्थः ॥ **एरजितीति** । इवर्णान्ताद्धातोरच्प्रत्ययो भवतीति 'णीञ् प्रापणे' इत्यतोऽच्प्रत्यये 'सार्वधातुकार्धधातुकयोरि'ति गुणे अयादेशे नयेति रूपसिद्धेरिति भावः ॥ **आतोऽनुपसर्ग इति** । अनुपसर्गे सुप्युपपदे धातोः कप्रत्ययो भवतीति ऐकारान्तात् 'क्षै क्षये' इति धातोः कप्रत्यये 'आदेच उपदेशेऽशिति' इति धात्वैकारस्य आत्वे 'आतो लोप इटि चे'ति तस्य लोपे पृदित्यत्र तकारलोपे च पृक्ष इति सिद्धेरिति भावः । न चैवं वपुर्विशेषणत्वात् पृक्षमिति भाव्यमित्यत आह **छान्दसः पुल्लिङ्ग इति** । 'पृक्षो वपुरि'ति श्रुतौ छान्दसपुल्लिङ्गत्वेन तदनुकरणत्वेनात्रापि पुल्लिङ्ग इति भावः । यद्वा छान्दस इति पूर्वेणान्वेति । नन्वसुन्प्रत्यये कथं 'आदेच उपदेशेऽशिती'ति एकारस्य प्राप्तात्वलोप इत्यत आह **किदिति** । तथा च 'आतो लोप इटि चे'ति आकारलोप इति भावः ॥ **मध्व इति** । मध्वाभिधमित्यर्थः । तत्पदं निर्वक्ति **मधुशब्द इत्यादिना** । **मधु द्यौरिति** । द्यौर्द्युलोकदेवता नोऽस्माकं पिता अतः मधु सुखदास्त्वित्यर्थः ॥ **तीर्थवाचीति** । कथमित्यतोऽवयवार्थमाह **वातेरिति** । 'वा गतिगन्धनयोरि'ति धातोरित्यर्थः । **घञर्थ इति** । स च भावे अकर्तरि च कारकेऽपि विहित इति तदर्थ इत्यर्थः । कप्रत्यये आतो लोपे वेति रूपसिद्धेरिति भावः ॥ **अस्येतीति** । मध्व इति पूर्वेणान्वयः । नन्वेवं मध्वुव इति भाव्यमित्यत आह **स्वरित्यत्रेवेति** । सुवरिति वक्तव्ये उकारलोपेन स्वरिति पठन्ति बह्वृचाः । तथेहापि मधुशब्दोकारलोप इत्यर्थः ।

**सु०—** भगवत्स्वरूपप्रतिपादनेनैव ग्रन्थोपसंहारः समुचित इत्याशयवान् नित्यापरोक्षं भगवन्तं सम्बोध्य [illegible]ाति **निःशेषमिति** ।

**अनु०—** **निःशेषदोषरहितकल्याणाखिलसद्गुण ।**
**भूतिस्वयम्भुशर्वादिवन्द्यं त्वां नौमि मे प्रियम् ॥**

***इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते***
***श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रानुव्याख्याने***
***चतुर्थाध्यायस्य चतुर्थः पादः ॥***

**भूतिः** महालक्ष्मीः ॥

**परि०—** भूतिपदस्यानेकार्थत्वाद्विवक्षितमर्थमाह भूतिर्महालक्ष्मीरिति ।

सु०—

वचनप्रसूनमाला जयतीर्थाख्येन भिक्षुणा रचिता।
ध्रियतां हृदये सदये कमलामहिलेन पूरुषेण ॥ १ ॥

**परि०—** कृतं व्याख्यानं स्वामिने समर्पयति **वचनेति**। यथा हि लोके भिक्षुकः तत्र तत्रोद्यानेषु पुष्पाण्याहृत्य मालां कृत्वा समर्पयेच्चेत्तां यथा दयालुर्हृदये बिभर्ति एवं वचनप्रसूनमाला मया समर्पिता हृदये दयया ध्रियतां इयं साध्वीत्यङ्गीक्रियतामित्यर्थः। **कमला** लक्ष्मीः **महिला** भार्या यस्येति स तथा तेनेत्यर्थः। माला हि प्रमदायुक्तस्यैव हृदयङ्गमेति **कमलामहिलेन** इत्युक्तम्।

सु०—

न वैदुष्यभ्रान्त्या न च वचनचातुर्यकुधिया
न मात्सर्यावेशान्न च चपलतादोषवशतः।
परं श्रद्धाजाड्यादकृषि कृतिमाचार्यवचसि
स्खलन्नप्येतस्माज्जगति न हि निन्द्योऽस्मि विदुषाम् ॥ २ ॥

**परि०— श्रद्धाजाड्यादिति**। भक्तिपारवश्यादित्यर्थः। **अकृषि** कृतवानस्मि। एतस्मात्स्खलनदोषान्न हि निन्द्योऽस्मि। किन्तु मान्य एव भवामीत्यर्थः।

सु०—

अनुव्याख्याऽमृताम्भोधेः समुत्पन्नाऽतिनिर्मला।
इयं न्यायसुधा भौमैर्विबुधैः सेव्यतां सदा ॥ ३ ॥

**परि०— भौमैः** भूमिगतैः। **विबुधैः** भूसुरैः ब्राह्मणैरित्यर्थः।

सर्वेन्द्रियप्रेरकेण श्रीप्राणपतिनेरितः। यदवोचमहं तेन प्री(णातु)यतां कमलालयः ॥

ये तु न्यायसुधापानकामुका रसिका बुधाः। आघ्रायेमं परिमळं सेवन्तां ते सुधामिमाम् ॥
(सेवन्ते तामिमां सुधाम्)

ज्ञानाब्धिरप्यवादीद्यत्स्खलत्त्वं स्वात्मनस्तदा। मादृशानां स्खलत्त्वं किं वाच्यं क्षाम्यन्तु तद्बुधाः ॥

*इति श्रीमन्न्यायसुधापरिमळे सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते*
*चतुर्थाध्यायस्य चतुर्थः पादः सम्पूर्णः ॥ ४-४ ॥*

सु०—

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृते-
रनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ।
कृतायां टीकायां विषमपदवाक्यार्थविवृतौ
चतुर्थेऽध्यायेऽस्मिँश्चरमचरणः पर्यवसितः ॥

*इति श्रीमन्न्यायसुधायां चतुर्थोऽध्यायः सम्पूर्णः ॥*

*॥ समाप्तोऽयं ग्रन्थः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

*अनेन कर्मणा एतद्ग्रन्थप्रतिपाद्यः*
*समस्तगुर्वन्तर्गतभारतीरमणमुख्यप्राणान्तर्गतसीतापतिश्रीमन्मूलरामचन्द्रः प्रीयताम् ।*
*प्रीतो भवतु ।*
*श्रीकृष्णार्पणमस्तु ॥*

कायेन वाचा मनसेन्द्रियैर्वा बुध्याऽत्मना वाऽनुसृतःस्वभावम् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

# तदिदाससूक्तम्

आथर्वणो बृहद्दिवः । इन्द्रः । त्रिष्टुप् ॥

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ १ ॥

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥ २ ॥

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ॥ ३ ॥

इति चिद्धि त्वा धना जयन्तं मदेमदे अनुमदन्ति विप्राः ।
ओजीयो धृष्णो स्थिरमा तनुष्व मा त्वा दभन् यातुधाना दुरेवाः ॥ ४ ॥

त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ॥ ५ ॥

स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् ।
आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि ॥ ६ ॥

नि तद्दधिषेऽवरं परं च यस्मिन्नाविथावसा दुरोणे ।
आ मातरा स्थापयसे जिगत्नू अत इनोषि कर्वरा पुरूणि ॥ ७ ॥

इमा ब्रह्म बृहद्दिवो विवक्तीन्द्राय शूषमग्रियः स्वर्षाः ।
महो गोत्रस्य क्षयति स्वराजो दुरश्च विश्वा अवृणोदप स्वाः ॥ ८ ॥

एवा महान् बृहद्दिवो अथर्वाऽवोचत् स्वां तन्वमिन्द्रमेव ।
स्वसारो मातरिभ्वरीररिप्रा हिन्वन्ति च शवसा वर्धयन्ति च ॥ ९ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीमध्वेशार्पणमस्तु ॥



प्रत्यक्षरं प्रतिपदं अनेकाकूतिगर्भिता । प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते ॥

– श्रीमद्राघवेन्द्रस्वामिनां परिमळटिप्पण्यां सुधाप्रशंसा



श्रीराघवेन्द्रस्वामिनां सालंकृतमृत्तिकावृन्दावनम्

श्रीप्रसन्नराघवेन्द्रस्वामिमठः

मुळबागलु